॥ श्रीविनायकविनतिः ॥

श्रीगणेशाय नमः ।
हेरम्बमम्बामवलम्बमानं लम्बोदरं लम्ब-वितुण्ड-शुण्डम् ।
उत्सङ्गमारोपयितुं ह्यपर्णां हसन्तमन्तर्हरिरूपमीडे ॥ १॥

मिलिन्द-वृन्द-गुञ्जनोल्लसत्कपोल-मण्डलं
श्रुति-प्रचालन-स्फुरत्समीरवीजिताननम् ।
वितुण्ड-शुण्डमण्डल-प्रसार-शोभिविग्रहं
निवारिताघ-विघ्नराशिमङ्कलालपं भजे ॥ २॥

गजेन्द्र-मौक्तिकालि-लग्न-कम्बुकण्ठ-पीठकं
सुवर्णवल्लि-मण्डली-विधानबद्ध-दन्तकम् ।
प्रमोदि-मोदकाञ्चितं करण्डकं कराम्बुजे
दधानमम्बिकामनो विनोद-मोददायकम् ॥ ३॥

गभीर-नाभि-तुन्दिलं सुपीत-पाट-धौतकं
प्रतप्त-हाटकोपवीत-शोभिताङ्ग-सङ्ग्रहम् ।
सुरा-ऽसुरार्चितांघ्रिकं शुभक्रिया सहायकं
महेशचित्त-चायकं विनायकं नमाम्यहम् ॥ ४॥

गजाननं गणेश्वरं गिरीशजा-कुमारकं
महेश्वरात्मजं मुनीन्द्र-मानसाधि-धावकम् ।
मतिप्रकर्ष-मण्डितं सुभक्त-चित्त-मोदकं
भजज्जनालिघोर-विघ्नघातकं भजाम्यहम् ॥ ५॥

लसल्ललाट-चन्द्रकं क्रियाकृतेऽस्ततन्द्रकं
महेन्द्रवन्द्य-पादुकं षडाननाग्रजानुजम् ।
अहिं निवार्य मूषकाधिरक्षकं मयूरकं
विलोक्य सुप्रसन्नमानसं गणाधिपं भजे ॥

हरिं निरीक्ष्य भीतिचञ्चलाक्षमेत्य मातरं
निजावनाय पार्श्वमागतां विलोक्य सत्वरम् ।
तदीय-वक्षसि प्रविश्य सुस्थिरं परे वरे
नमामि सेवकालिशोक-शोषकं निरन्तरम् ॥ ७॥

निलिम्प-लोकमण्डलो-प्रपूर्ण-पूजनीयकं
सुभक्त भक्तिभावना विभाविताखिलप्रदम् ।

प्रभूत भूति भावकं दुरूह दुःख पावकं
व्रजेश्वरांश-सम्भवं विद्युप्रभासितालिकम् ॥ ८॥

गिरीन्द्र-नन्दिनी-कराम्बुज-प्रसाधिताऽलकम्
विलोल-शुण्ड-चुम्बितोग्र-भालचन्द्र-बालकम् ।
निजाखु-खेलनापरं कखन्तमस्तचापलं
नमामि सिद्धि-बुद्धि-हस्त-चालि-पञ्चचामरम् ॥ ९॥

विनायकस्य विनतिं पठतां शृण्वतां सताम् ।
सिद्धि-बुद्धि-प्रदां सन्ति मङ्गलानि पदे पदे ॥ १०॥

॥ इति पण्डित-श्रीशिवप्रसादद्विवेदि-विरचिता विनायक-विनतिः समाप्तः ॥